ॐ सच्चिदानन्दात्मने नमः ।

# अथ स्वानुभवप्रकाशः ।

श्लोकाः ।

महावाक्यार्थप्रकाशनरूपाः ।

यः प्राग्विसृज्य भुवनं तनुमाविवेश यः पञ्चभूतसु रमानुषतिर्यगात्मा ॥ येनावलोकयति वक्त्यभिम न्यते च प्रज्ञानमात्रविभवोहमसौ परात्मा ॥ १ ॥

यद्व्याकृतं जगदभूत्तमसा नखाग्राद्यत्र प्रविष्टतनु कृत्स्नमकृत्स्नमासीत् ॥ श्रेयस्तदेव परमं परमार्थतो-ऽहं ब्रह्मास्मि तद्विदितवाद्धि तदेव सर्वम् ॥ २ ॥

आसीत्सदेव हि भवानन्नृतं विधाय तेजोमुखं तद-भिमत्य बभूव जीवः ॥ देहान्तशुङ्गमवधूय विलोकय स्वं सद्ब्रह्म तत्त्वमसि बोधसुखाद्वितीयम् ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऐक्यं प्रकल्प्य प्रणवेऽखिलस्य पादान्विभज्य प्रविलाप्य शिष्टः ॥ एकः स आत्मा जगदेऽयमात्मा ब्रह्मेति विस्पष्टमथर्ववाण्या ॥ ४ ॥

नित्यं शुद्धं विबुद्धं विकृतिविरहितं नित्यमुक्तस्वभावं सत्यं सूक्ष्मं निरस्तद्वयमनवयवं पूर्णमानन्दरूपम् ॥ प्रत्यग्ब्रह्माहमस्मि स्वरसदृशिखौ ध्वान्तवद्विश्वमेतन्नासीदास्ते भविष्यत्यपि मयि सुखसज्ज्योतिरात्मन्यसङ्गे ॥ ५ ॥

ब्रह्म सच्चिदनन्तमेकमशेषवाङ्मनसातिगं पञ्चकोशगुहान्तरं च निगद्य शश्वदलौकिकम् ॥ तद्विसृज्य विवेश सत्यमसत्यमित्युभयं स्वतः सत्यमित्यभिधायिनी श्रुतिरद्वयं स्फुटमभ्यधात् ॥ ६ ॥

ब्रह्मवित्परमेति तत्खलु सच्चिदद्वयलक्षणं वेदनञ्च गुहान्तरस्य निजस्वरूपतदाप्तये ॥ इत्युदीर्य सदद्वयत्वसमर्थनाय समाददे विश्वसृष्टिमिमां श्रुतिर्न हि तत्समर्थनमन्यथा ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदौ ब्रह्मनिष्ठं सद्गुरुं गत्वा यतेत आत्मानमेव विजानीयादहं किंस्वरूपः—स्वमात्र एवास्ति किं वा जड़ादिकमप्यस्तीति प्रश्नः कर्त्तव्यः परमश्रद्धया ॥ यस्मात्तं विदित्वैव साक्षान्मोक्षभाग्भवति नान्यथा,तमेव विदित्वा अतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय,तरति शोकमात्मविदिति श्रुतेः ॥ अत एवान्यैरुपायैर्ज्ञानशून्यैर्नात्मा ज्ञायते ॥ नो चेत् पृच्छ सर्वान् तत्त्वज्ञान् ब्रह्मनिष्ठान् ॥ एवमेव सर्वोपनिषदोऽपि वदन्ति ॥ यत् सच्चिदानन्दस्वरूपं ब्रह्मैवास्ति नेतरत्किञ्चिद्द्वितीयमिति नास्त्यत्र संशयोऽस्ति ॥ १ ॥

ज्ञानेन सर्वाणीन्द्रियाणि विषयेभ्यो निरुध्य एकान्ते स्थित्वा किंस्वरूपोऽयमात्मा, इदं परिदृश्यमानञ्च किंस्वरूपमिति वारंवारं गुरुलब्धयुक्त्या विचारयेन्निश्चलेन मनसा ॥ किञ्च दुःखप्रदां जगदिच्छामयीं वासनां भोगरूपां त्यज ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानिभिर्यदुक्तं तन्मनसि धार्य्यं विचार्य्यञ्च पुनः-पुनः परमानन्दावाप्तये॥भोगवासनात्यागरूपदाम पादयोः बन्धयित्वा कामभोगान्निवर्त्तयेन्मनोदुःखरू-पात् ॥ नो चेन्महती विनष्टिर्भविष्यतीति ॥ २ ॥

विज्ञानघने सुखरूपे त्वयि नास्ति जगदणुरपि किमु महतोऽस्य संभवः ॥ यत्र त्वस्य सर्वमात्मै-वाभूत्तत्केन कं पश्येत्, यत्र द्वैतमिव भवति तदितर इतरं पश्यतीत्यादिश्रुतेः ॥ त्यज बाल-भावमज्ञत्वमज्ञानञ्चेति । सद्गुरोरन्वेषणं कृत्वा ॥ पश्येद्वै तस्यदुःखरूपस्य कथमस्ति तत्र संभवः ॥ इदं सर्वन्तु स्वप्नवन्मिथ्यैव स्वशक्त्या प्रतीयमा-नम् ॥ वस्तुतः सच्चिदानंदस्वरूप आत्मैवास्ति स्वस्माद्भिन्नत्वेन भासमानो न किञ्चिदस्ति द्वि-तीयकम् । यथा स्वाप्नं वस्तु न स्वानुभवाद्भिन्नं

---

१ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ॥तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथैव जाग्रज्जगदपि, यथा च स्वर्णाद्भिन्नं न कटकादिकं तन्तुभिन्नो न पटश्चेति ॥ ३ ॥

ज्ञात्वैव स्थीयतामात्मैवास्ति प्रकाशस्वरूपो जगद्भ्रमस्याधिष्ठानस्वरूपो नान्यः ॥ तस्य भासा सर्वमिदं विभाति स्वप्रकाशरूपस्य॥स्वतस्तु जडरूपो मिथ्यैवाऽयं संघातः ॥ चित्सत्तां विना न कोऽप्यस्ति न विजानाति च ॥ नास्त्येव द्वितीयं वस्तु ॥भवानेवानेकविचित्ररूपेण भासते निर्विकारः शुद्धविज्ञाघन आनन्दस्वरूपः ॥ भ्रमेण बालो यथा वेतालं जानाति तथैव पारमार्थिकसत्ताशून्येनाज्ञानेनेदं विचित्ररूपं प्रतीयते नान्यन्नाम द्वितीयं किञ्चिदिति ॥ ४ ॥

किञ्च स्वस्य जीवनं प्रियं जानाति मरणाच्च बिभेति पुरुष इति महदाश्चर्य्यम् ॥ भवानेव जडवर्गाणामात्मा सच्चिदानन्दरूपो जन्मादिहीनः स्वप्रकाशरूपश्च ॥ घटाकाशो यथा सर्वेषु घटेषु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नष्टेष्वपि न नष्टो निर्लिप्त एवास्ति तथैवात्मा त्वमपि ॥ त्वत्समो नास्त्यन्योऽभ्यधिकः कुतोऽन्यः सदा एकरूप आद्यन्तशून्यः समः शान्तो नित्य-मुक्तो निर्विकारो ज्ञेयवर्जितश्चिन्मात्रस्वरूपः ॥ ५ ॥

अज्ञानाऽवच्छिन्नस्य जीवस्यानादिवासनैव तं संसारे भ्रामयति ॥ स्वात्मानं विस्मृतिं गमयित्वा यदेश्वरानुग्रहो भवति तदा ब्रह्मनिष्ठं गुरुं प्राप्या-त्मानं विदित्वा—अहं ब्रह्मास्मीति कृतार्थो भवति नान्यथा ॥ निष्कामकर्मणा तु चित्तशुद्धिरेव भवति ॥ उपासनया च चित्तैकाग्र्यं भवति ॥ आत्मज्ञानेन तु मोक्षावाप्तिर्दुःखनाशो भवती-ति निश्चितं वदामि नान्यथा वचांसि मे गुरुकृपा-मृततृप्तस्य ॥ एवं ह्यात्मनो जीवादिभावोपि न वस्तुतोऽस्ति ॥ किन्तु ब्रह्मात्मैवास्ति सच्चिदान-न्दरूपो नान्यदिति परमरहस्यम् ॥ ६ ॥

किंस्वरूपोऽहमिति स्वात्मानं विस्मृत्य मनो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽनुरूपं गमयित्वा दुःखमनुभवसि सद्गुरुमुपगम्य मनो मारय ज्ञानं लब्ध्वा सुखी भव ॥ यथा स्वप्नात्प्रबुद्धो न विपर्येति स्वाप्नदुःखंच परित्यजति स्वरूपसुखमनुभवति, यथा च विस्मृतकण्ठमणिं लब्ध्वा सुखी, भवति तथात्मानं गुरुभ्यो विदित्वा कृतार्थो भवति न किञ्चिद्वाञ्छति ह्यानन्दमनुभवति ॥ ७ ॥

स्वयंप्रकाशरूपत्वात्तव सर्वस्य जगतः प्रकाशक त्वमेव ॥ भवदीयसत्तयैव व्यवहारो भवति ॥ सर्वेषां चक्षुषि त्वमेव द्रष्टा प्रकाशरूपोऽसि नसंशयः ॥ अज्ञानेन स्वयमेव न जानाति स्वात्मानम् ॥ किन्तु कर्त्ता भोक्ता सुखी दुःखी जातोऽहं मृतोऽहं जीवोऽहं दासोऽहं जडोऽहं दरिद्रोऽहं धनिकोऽहमित्यात्मानं भ्रमेण मन्यते स्वप्नजागरणादिकम् ॥ स्वाविद्यया तवैव स्वप्नः ॥ बहुवारमेवायं जातःस्वप्नप्रपञ्चः ॥ अतोऽनादिरयमिति वदन्त्याचा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थ्यो ब्रह्मज्ञाः ॥ स्वयं तु प्रकाशरूपो निर्विकारः सच्चिदानन्दस्वरूपो भवान् नास्त्यत्र संशयः ॥८॥

सद्गुरुमुपसृत्यात्मविचारे कृते न द्वितीयोऽस्ति कश्चिदिति निश्चितं वदामि ॥ तथा चोक्तं- "विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते ॥ आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इति ॥ तस्मान्नास्ति शोकावकाशः ब्रह्मनिष्ठस्य ॥ सद्गुरोः संगं कुरु ॥ तदा स्वात्मानमहं ब्रह्मास्मीति सच्चिदानन्दरूपो न संशय इति च ज्ञात्वा शोकनिवृत्तिर्भवति ॥ अतो हि तेषां वचांसि श्रेयोरूपाण्येव पथ्यरूपाणि हितकराणि चेति श्रोतव्यानि मन्तव्यानि निदिध्यासितव्यानि च ॥ तथा चोक्तं— "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ॥ मत्वा च सततं ध्येय एते दर्शनहेतव" इति ॥ अत एव विवेकवैराग्यादिसाधनयुक्तेन पुरुषेण ह्यात्मा श्रो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तव्यो ज्ञातव्यः साक्षात्कर्त्तव्य एव॥ मनोमालिन्यं निष्कामकर्मणा मार्जयित्वोपासनया च स्थिरीकृत्य विवेकेन ज्ञातव्यः॥ स्वच्छे मनसि स्वरूपसाक्षात्कारो भवति यथा स्वच्छदर्पणे मुखप्रतिबिम्बो भवति॥स्वात्मानं विचार्य्य दृष्टे तदा त्वमेव सच्चिदानन्दरूपो वस्तुपरिच्छेदरहितो ह्यन्योन्याभावप्रतियोगिको न संशयः॥ ९॥

अणुमात्रमपि संदेहो नास्ति न कार्यो, यतस्त्वमेव सच्चिदानन्दरूपं ब्रह्मासि॥ प्रमाणम्—"अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, तत्त्वमसि, सर्वं खल्विदं ब्रह्म, विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, पुरुष एवेदँ सर्वम्, आत्मैवेदं सर्वम्" इत्त्यादिकम्॥ कथं वनेवने भ्रमसि तीर्थेतीर्थे च भ्रमस्यविद्यया॥१०॥

बहुविचित्राणि रूपाणि जगति दृश्यन्ते भ्रमेण॥ तानि तु विना विचारमेव न वस्तुतोबहुरूपाणि॥ किं त्वेकमेवाद्वितीयं ब्रह्म सच्चिदानन्दलक्षणं द्वितीयभे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दरहितामिति ॥ यत्तु दृश्यते तत्स्वप्ननिभं बहुरूपं स्वस्माद्भिन्नं मिथ्यैव ॥ तवैव खलु भ्रान्तिरियं हि दुःखदा॥ वस्तुविचारे न द्वितीयोऽस्ति कश्चिदिति॥ किन्तु सदात्मैवास्ति सच्चिदानन्दरूपः ॥ ११ ॥

यस्मिन्ब्रह्मात्मनि भ्रान्तिविजृम्भितं गमनागमनादिरूपं नास्त्येव तत्तु सदा निर्विकारमेवाद्वितीयं विज्ञानघनं प्रत्यग्रूपम् ॥ भ्रमेण यथाऽभ्रेषु धावमानेषु चन्द्रो धावतीति बालानां प्रतीतिर्भवति तथा शरीरेन्द्रियादिषु धावमानेष्वात्मा धावतीति प्रतीतिः ॥ वस्तुतस्तु नात्मा धावति न जायते म्रियते वा निर्विकारत्वाद्व्यापकत्वात्सच्चिदानंदरूपत्वाच्च ॥ १२ ॥

शुद्धे त्वयि नास्ति जन्मादिमलम् ॥ वृथैव खलु भ्रान्तोऽसि, मनुष्यशरीरं परमदुर्लभं लब्ध्वा किमर्थं स्वात्मानं नानुभवसि ॥ कर्मादिरूपेण प्रायश्चितेन न वस्तुतो ह्यात्मा शुद्ध्येति॥ किं त्वन्तःकरणमेव॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमं पवित्रतममविद्यादिमलानां नाशकञ्च ज्ञानमेव विद्धि॥ तथा चोक्तं भगवता—"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते॥ तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति" इति॥ १३॥

त्वन्तु शुद्धज्ञानरूपोऽसि, ज्ञयं द्वैतं नास्त्येव, न संशयोऽस्ति॥ त्वयि व्यापके शुद्धे वस्तुपरिच्छेदवर्जिते सच्चिदानन्दस्वरूपे न ज्ञानाज्ञानेअविद्यावृत्तिरूपे स्तः॥ यथा सूर्यें न स्तश्छायातपौ तद्वत्, यथा च स्वप्नगतच्छायातपादिकं न वस्तुतोऽस्ति॥ यदा ह्येवं सद्गुरुभ्यो ह्यात्मज्ञानं भवति तदा भवानेव विज्ञानघनः॥ सवन्तु मायिकं न किञ्चिदिति रहस्यम्॥ १४॥

आत्मज्ञानिनां त्विदमेव चिह्नं यन्न कामपि चिन्तां शोकं वा कुर्वन्ति॥ किन्तु सच्चिदानन्दस्वरूपेण तिष्ठन्ति ह्यात्मनि॥ द्वितीयभेदरूपं वस्तुपरिच्छेदं नैयायिकादीनां द्वैतवादिनामिव न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्यन्ति च ॥—"तत्र को मोहः कः शोक एकत्व-मनुपश्यत" इति श्रुतेः ॥ १५ ॥

नानारूपं पत्रपुष्पादिस्थानीयं जगद्दृष्ट्वा न भ्रमितव्यम् किं त्वेकमेव शुद्धं सदा सनातनं बीजं ब्रह्मैव स्वाविद्यया नानारूपं गतमिव द्रष्टव्यमिति ॥ प्रमाणं—तदनन्यत्वमारम्भणशब्दादिभ्यः, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिकम् ॥ द्वितीयं सदसदादिरूपं न जातमिति पश्य तदा कृतार्थो भवसि ॥ १६ ॥

यः सच्चिदानन्दरूपमात्मानं गुरुतो जानाति पुमान् तस्यैव मिथ्याद्वैततो निवृत्तिर्भवति, तस्य चात्मन्येव समाधिर्भवति नान्यस्य ॥ आत्मक्रीड आत्मरतिरेष एव ब्रह्मविदां वरिष्ठः स पूज्यः स मान्यः स धन्यः स कृतकृत्यः तस्य कुलं पवित्रं जननी कृतार्था स च सर्वदा ब्रह्मानन्दाम्बुधौ मग्नो भवति द्वितीयाऽभावाच्च सर्वस्माद्दुःखाद्विनिर्मुक्तो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवति ब्रह्मैव सन्ब्रह्माप्येति न तस्मादधिकतरोऽस्ति कश्चिदिति परमरहस्यं सर्वासामुपनिषदां शास्त्राणाञ्चेति ॥ १७ ॥

भवदीयात्मनो न ब्रह्म भिन्नं सच्चिदानन्दरूपं निश्चितं वदामि, न भ्रमितव्यं कुतार्किकबुद्ध्या॥नो चेन्महती विनष्टिः ॥ यस्यात्मनोऽन्वेषणं कुरुते स त्वमेव, स्वस्मान्न भिन्नोऽयमात्मा, भवानेव सच्चिदानन्दरूपः, कस्यान्वेषणं कुरुते, स्वात्मानं विस्मृत्य स्वाऽविद्यया ॥ जहि मोहं त्यज शोकं भज साधुसमागमम् ॥ तदा कृतार्थो भविष्यसि नान्यथा ॥ १८ ॥

त्वं तु सर्वदैकरतः सुखरूपो निरञ्जनो द्वितीयभेदरहितो न संशयः ॥ एवं येन दृष्टं स तु सर्वरूपः सर्वप्रकाशकृत्सर्वरहितः स्वमात्ररूपो विज्ञानघनः ॥ तत्सदृशं तु नास्त्यन्यत्स्वर्गादिकं दुःखरूपम् ॥ एवंवित्सर्वदा स्वात्मनि तिष्ठति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वस्माद्दुःखाद्विमुक्तो भवति सुखमनुभवति, यथा मत्तगजः स्वस्य बन्धनं परिमुच्य सुखी भवति ॥१९॥

आत्मानं ज्ञात्वा सर्वा चिन्तापगता भवति ह्यनित्यं देहं वा प्रबोध्य ब्रह्मरूपेण तिष्ठति ॥ सर्वं वस्तु कलितं स्वात्मनि तन्नाधिष्ठानाद्भिन्नं नचात्मनो हानिकरञ्च, विज्ञानघनमात्मानं बुद्ध्वा न किञ्चिज्ज्ञातव्यमवशिष्यते ॥ २० ॥

सर्वस्य ज्ञातारमात्मानं न कोऽपि जानाति ह्यात्मैवसर्वस्य ज्ञाता ॥ प्रमाणं–"येन सर्वं विजानाति तं केन विजानीयाद्"इति॥"येन रूपं रसं गन्धं सर्वं जानासि राघव॥तमात्मानं परं ब्रह्म जानीहि परमेश्वरम्" इति ॥ सर्वेषां प्रत्यक्षादिप्रमाणानां प्रमाणं मुख्यं तु ब्रह्मैव॥तत्सत्तयैव प्रमाणादयोऽन्यान्बोधयन्ति ॥ सर्वे वेदा ह्यन्यान्स्वात्मभिन्नान्निषेधयन्ति च ॥नात्मसमःकाश्चित्किमाधिकमिति ब्रह्मैव सर्वंखलु नान्यद्द्वितीयकम् ॥ २१ ॥ अहंकरादीनां जडत्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्परिच्छिन्नत्वान्न किञ्चिदिति ॥ बुद्ध्यादयो मिथ्या स्वप्नगजादिवत् ॥ आत्मा तु सच्चिदानन्दस्वरूपोऽस्ति निश्चितं न द्वितीयोऽस्ति कश्चिदिति परमासिद्धान्तोऽस्ति ॥ २२ ॥

आत्मानं ज्ञात्वापि यो विषयादिदुःखरूपं नश्वरं च वर्त्तते तत्परवशो गर्द्दभ एव॥ यतः साधव आत्मज्ञाः परमानन्दा न विषयेषु रमन्ते मिथ्याभूतेषु दुःखरूपेषु ॥ ये रमन्ते ते भ्रान्ताः पाखण्डिन एव केवलं वेदान्तं कथयन्तो जनान्व्यामोहयन्ति स्वार्थपरास्ते दुर्गतिं यान्ति च न तेषां सङ्गो विधेयो हानिकरत्वात्तान्परिवर्जयेद्यत्नतो मुक्तिमिच्छुः ॥ २३ ॥

यथैकमेव बीजं नानारूपं दृश्यते तथैवैकमेव सच्चिदानन्दस्वरूपं ब्रह्म नानारूपतया विवर्त्तते[1] न वस्तुतो नानारूपं गतम्॥ किन्तु निर्वि-

---

१ अतात्त्विकोऽन्यथाभावो विवर्त्तः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारमेव सच्चिदानन्दरूपमेवास्ति ॥ तद्यस्योपरि कृपां करोति स एवैवंविधो जानाति ॥ ज्ञात्वा च कृतकृत्यो भवति न तस्य किञ्चित्कर्त्तव्यमस्ति पूर्णत्वाद्द्वितीयाभावाच्च ॥ स एव जीवन्मुक्तो ब्रह्मरूपः सर्वस्माद्वरिष्ठः स एव धन्यः ॥ तस्यैव जन्म सफलं नान्येषां विषयिणां पशुतुल्यानामज्ञानामिति ॥ २४ ॥

अस्तिभातिप्रियरूपाद्ब्रह्मणो भिन्ने न नामरूपे स्तः ॥ यन्मनसा चक्षुषा चानुभूयते दृश्यते च तन्नश्वररूपमवेहि नोचेद्दुःखात्तरणं न भविष्यति ॥ तथा च— द्वितीयाद्वै भयं भवति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, उदरमन्तरं कुरुते अथ तस्य भयं भवति, अथ योऽन्यां देवतामुपास्तेअन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानामिति श्रुतयोऽपि द्वैतरूपस्य दुःखप्रदस्य निन्दां कुर्वन्ति परमाद्वैतबोधनाय ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वस्वरूपे स्थितो ज्ञानी, न द्वितीयं पश्यति ॥ धन्योऽस्मि यस्य परमकृपया विष्णुरूपोऽस्मि सच्चिदानन्दघनः ॥ २६ ॥

---

सच्चित्सौख्यैकरस्यं निगदितमिह यद्ब्रह्मणो लक्षणं तत्प्रत्यक्तत्त्वेऽपि जैवे सममखिलदृशस्तस्य बाधाद्ययोगात् ॥ मुख्यप्रेमास्पदत्वादुपधिविभिदया वस्तुभेदाद्यसिद्धेर्ब्रह्मांशत्वप्रवादात्तनुकरणदृशः स्वप्रकाशत्वतश्च ॥ १ ॥

स्वाप्नार्थैर्बाध्यमानैरयमपि सह यद्बाध्यमानो न दृष्टो बाधद्रष्टा स्वयं सन्कथमिव कलयेदात्मबाधं दृगात्मा ॥ दृग्भेदे यन्न मानं यदपि न च समा दृग्दृशोर्गोचरो वा यच्चासौ निर्विकारस्तदयमनवधिः प्रत्यगात्मा सदात्मा ॥ २ ॥

यद्बाल्यादिष्ववस्थास्वहमहमिति भात्येकरूपो विभिन्नास्वध्यक्षं जाग्रदर्थानिव निजमहसा यच्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुप्तोऽपि वेत्ति ॥ यश्चाहङ्कारमोषेप्यपरिमुषितचित्सु प्तिसौख्यादिसाक्षी द्रष्टुर्दृष्टेरलोपे श्रुतिरपि तदसौ प्रत्यगात्मा दृगात्मा ॥ ३ ॥

यश्चात्मान्यद्धवाणं प्रियमिति तव तद्रोत्स्यतीति ब्रवीति प्राज्ञेनैक्यं सुषुप्तौ निगदति च यदानन्द-संविन्मयेन ॥ इच्छा यत्स्वानुकूले त्रिजगति विदिता स्वप्रतीपे जिहासा यच्च स्यां सर्वदेति स्पृहयति तदसौ प्रत्यगात्मा सुखात्मा ॥ ४ ॥

इत्थं मीमांस्यमाने श्रुतिगुरुवचनैर्युक्तिभि-श्चानुभूत्त्या शश्वज्जीवेशतत्त्वे निपुणमधिगते वस्तुतो लक्षणैक्ये ॥ निष्प्रत्यूहं निजार्थं सम-धिगमयितुं तत्त्वमस्यादिवाक्यान्याद्यन्तावेक्षणा-द्यैरधिगतहृदयान्यञ्जसैव क्षमन्ते ॥ ५ ॥

सत्यत्वं तस्य सौक्ष्म्यान्नभस इव जगन्नी-लिमाधारभावादव्यावृत्तेरवृत्तेरखिलदृशितया सर्व-बाधावधित्वात् ॥ निस्सङ्गत्वाविरोधात्सकल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गततयात्मत्वतः साक्षिभावादन्यद्रष्टुर्निषेधात्स्फुट-
वचनशतैः स्वानुभूत्या च सिद्धम् ॥ ६ ॥

आत्मत्वादीक्षितृत्वादखिलवशितया शास्त्र-
योनित्ववादात्कामाभिध्योपदेशाच्छशितपनमुख-
द्योतिभारूपतोक्तेः ॥ साक्षादेवापरोक्षादसुकृतसुकृ-
ताध्यक्षसाक्षित्ववादात्सर्वज्ञज्ञादिशब्दात्स्फुटवचन-
शतैश्चापि सच्चित्स्वभावम् ॥ ७ ॥

सौख्योत्कर्षावधित्वान्निखिलसुखकणाम्भोनि-
धित्वश्रुतिभ्यो मुक्तप्राप्यत्ववादान्निरवधिपरमानन्द-
भूमात्मकत्वात् ॥ सर्वप्रत्यक्त्ववादान्निधिनिलय-
वधूसाम्यवादात्सुषुप्तावानन्दे ब्रह्मतोक्तेरपि च
रसतया तत्सदानन्दरूपम् ॥ ८ ॥

## वस्तुतस्तु स्वात्मासिद्धमेव चिद्रूपम्॥

यस्मादुत्पत्तिगुप्ती क्षतिरपि जगतां यच्च शास्त्रैक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योनिः सर्वज्ञं मायया यत्सहजसुखसदद्वैतसंवि-
त्स्वरूपम् ॥ तद्ब्रह्म स्वप्रकाशं श्रुतिशिखरगिरां सैव
तात्पर्यभूमिः स्वात्मासौ यं विदित्वा जनिमृति-
जलधिं निस्तरन्तीह सन्तः ॥ १ ॥

अहं न मायी न च भोगिशायी न चक्रधारी
न दशावतारी ॥ न मे प्रपञ्चः परिपालनीयस्त-
थापि विष्णुः प्रभविष्णुरस्मि ॥ २ ॥

अक्षजादिबहिःप्रमाणसमेधितद्वयविभ्रमे जाग्रति
श्रुतिरद्वयप्रतिबोधने सहसाऽक्षमा ॥ व्यावहारि-
कवस्तुजातमिदं मृषेति विवक्षया प्रक्रियां रचयां
बभूव विसृष्टिसंहृतिलक्षणाम् ॥ ३ ॥

अपरोक्षवस्तुविषतिशब्दजाप्यपरोक्षतां न विज-
हात्यखण्डधीः॥ निपुणं निशम्य दशमस्त्वमित्यदो
वचनं न हिस्वमुपलब्धुमिच्छति ॥ ४ ॥

ज्ञात्वा देवं सर्वपाशापहानिर्नान्यः पन्थाश्चेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूयोवचोभिः ॥ ज्ञतेः साक्षान्मुक्तिहेतुत्वसिद्धाव-
ध्यासत्वं वन्धनस्वार्थसिद्धम् ॥ ५ ॥

न मूर्त्तयोऽष्टौ विषमा न दृष्टिर्न भूतिलेपो न गतिर्वृषेण॥न भोगिसङ्गो न च कामभङ्गस्तथापि साक्षात्परमाऽऽशिवोऽहम् ॥ ६ ॥

धन्यः स एव कृतकृत्यतमःसमस्तमान्यःस एव कुलमस्य च धन्यधन्यम् ॥ संन्यस्य कर्मनिगडं श्रुतिसारसौख्ये विन्यस्य चित्तमभयात्मनि निर्वृतो यः ॥ ७ ॥

इति श्रीब्रह्मनिष्ठपण्डितहनुमद्व्यासविरचितः
स्वानुभवप्रकाशः समाप्तः ।

---



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"श्रीवेङ्कटेश्वर" छापाखानेकी परमोपयोगी
स्वच्छ शुद्ध और सस्ती पुस्तकें।

यह विषय आज २५।३० वर्षसे अधिक हुआ भारतवर्षमें प्रसिद्धहै कि, इस छापाखानेकी छपी हुईं पुस्तकें सर्वोत्तम और सुन्दर प्रतीत तथा प्रमाणित हुईं हैं सो इस यन्त्रालय में प्रत्येक विषय की पुस्तकें जैसे-वैदिक, वेदान्त, पुराण, धर्मशास्त्र, न्याय, मीमांसा, छन्द, ज्योतिष, काव्य, अलंकार, चम्पू, नाटक, कोष, वैद्यक, साम्प्रदायिक तथा स्तोत्रादि संस्कृत और हिन्दी भाषाके प्रत्येक अवसर पर विक्रीके अर्थ तैयार रहतेहैं। शुद्धता स्वच्छता तथा कागज़की उत्तमता और जिल्द की बँधाई देश भरमें विख्यात है। इतनी उत्तमता होनेपर भी दाम बहुत ही सस्ते रक्खे गये हैं और कमीशनभी पृथक् काट दियाजाताहै। ऐसी सरलता पाठकों को मिलना असंभवहै संस्कृत तथा हिन्दीके रसिकोंको अवश्य अपनी २ आवश्यकतानुसार पुस्तकों के मँगानेमें त्रुटि न करना चाहिये ऐसा उत्तम, सस्ता और शुद्ध माल दूसरी जगह मिलना असम्भव है 'सूचीपत्र' मँगा देखो॥

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना-खेतवाड़ी-बम्बई.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

